# आञ्जनेय गायत्रि ध्यानं त्रिकाल वंदनं च

**श्री आञ्जनेय स्वामी परदेवताभ्यो नमः**

## ध्यानम्

उद्यदादित्य संकाशं उदार भुज विक्रमम् ।
कन्दर्प कोटि लावण्यं सर्व विद्या विशारदम् ॥

श्री राम हृदयानंदं भक्त कल्प महीरुहम् ।
अभयं वरदं दोर्भ्यां कलये मारुतात्मजम् ॥

अञ्जनानन्दनं वीरं जानकी शोकनाशनम् ।
कपीशं अक्षहन्तारं वन्दे लंका भयंकरम् ॥

आञ्जनेयं अतिपाटलाननं कञ्चनाद्रि कमनीय विग्रहम् ।
पारिजात तरुमूल वासिनं भावयामि पवमान नन्दनम् ॥

उल्लंघ्य सिन्धोः सलिलं सलीलं यस्शोक वह्निं जनकात्मजाय ।
आदाय तेनैव ददाह लंकां नमामि तं प्रान्जलिराञ्जनेयं ॥

अतुलित बलधामं स्वर्ण शैलाभदेहम्
दनुजवन कृशानं ज्ञानिनां अग्रगण्यम् ।
सकल गुण निधानं वानराणां अधीशम्
रघुपति प्रिय भक्तं वात जातं नमामि ॥

गोश्पदीकृत वारशिं मशकीकृत राक्षसाम् ।
रामायण महामाला रत्नं वन्दे अनिलात्मजम् ॥

यत्र यत्र रघुनाथ कीर्तनं तत्र तत्र कृत मस्तकाञ्जलिम् ।
भाश्पवारि परिपूर्ण लोचनं मारुतिं नमत राक्षसान्तकम् ॥

अमिषीकृत मार्तंदं गोश्पदीकृत सागरम् ।
तृणीकृत दशग्रीवं आञ्जनेयं नमाम्यहम् ॥

मनोजवं मारुत तुल्य वेगं
जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानर यूथ मुख्यं
श्री रामदूतं शिरसा नमामि ॥

आञ्जनेय गायत्रि
ॐ आञ्जनेयाय विद्महे वायुपुत्राय धीमहि ।
तन्नो हनुमत् प्रचोदयात् ॥

Meaning: I wish to know the son of a~njani.
I meditate on vAyu putra.
May that hanumAn propel us.

आञ्जनेय त्रिकाल वंदनं
प्रातः स्मरामि हनुमन् अनन्तवीर्यं
श्री रामचन्द्र चरणाम्बुज चंचरीकम् ।
लंकापुरीदहन नन्दितदेववृन्दं
सर्वार्थसिद्धिसदनं प्रथितप्रभावम् ॥
Meaning: I remember that hanuman during the early hours as one whose valor is immeasurable. I remember that bee who stays always at shrI ramachandra\'s feet. I remember HIM who burnt la.nka and made gods happy. I remember him who is the store house of all siddhis and who is capable of anything.

माध्यम् नमामि वृजिनार्णव तारणैकाधारं
शरण्य मुदितानुपम प्रभावम् ।
सीताधि सिंधु परिशोषण कर्म दक्षं
वंदारु कल्पतरुं अव्ययं आञ्ज्नेयम् ॥
Meaning: I bow that Anjaneya svAmi during the mid day as the one capable Person to crossing the ocean, who blesses the

person with enormous happiness when
he/she takes refuge in HIM. He is
entrusted with the responsibility of
annihilating sIta\'s sorrows. He is like
a wish-fulfilling tree for one who bows to HIM.

सायं भजामि शरणोप स्मृताखिलार्ति
पुञ्ज प्रणाशन विधौ प्रथित प्रतापम् ।
अक्षांतकं सकल राक्षस वंश
धूम केतुं प्रमोदित विदेह सुतं दयालुम् ॥
Meaning: I worship that A~njaneya svAmi
during the evening as the one who saves
everyone who takes HIS name. He the most
valorous one, who killed akShA and was
the dhUmaketu for all the demons.
He also made sIta devi (daughter of
videha country) happy.

## श्रीआंजनेय द्वादशनामस्तोत्रम्

हनुमानंजनासूनुः वायुपुत्रो महाबलः ।

रामेष्टः फल्गुणसखः पिंगाक्षोऽमितविक्रमः ॥ १॥

उदधिक्रमणश्चैव सीताशोकविनाशकः ।

लक्ष्मण प्राणदाताच दशग्रीवस्य दर्पहा ॥ २॥

द्वादशैतानि नामानि कपींद्रस्य महात्मनः ।

स्वापकाले पठेन्नित्यं यात्राकाले विशेषतः ।

तस्यमृत्यु भयंनास्ति सर्वत्र विजयी भवेत् ॥

## आञ्जनेयद्वादशनामावलि:

1. ॐ हनुमते नमः ।
2. ॐ अञ्जनासूनवे ।

3. ॐ वायुपुत्राय ।
4. ॐ महाबलाय ।
5. ॐ रामेष्टाय ।
6. ॐ फल्गुनसखाय ।
7. ॐ पिङ्गाक्षाय ।
8. ॐ अमितविक्रमाय ।
9. ॐ उदधिक्रमणाय ।
10. ॐ सीताशोकविनाशकाय ।
11. ॐ लक्ष्मणप्राणदात्रे नमः ।
12. ॐ दशग्रीवस्यदर्पघ्ने नमः ।

---

# श्रीमदाञ्जनेय भुजङ्गप्रयातस्तोत्रम्

।। अथ ध्यानम् ।

मनोजवं मारुततुल्यवेगम्
जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यम्
श्रीरामदूतं शरणं प्रपद्ये ॥

बुद्धिर्बलं यशो धैर्यं निर्भयत्वं अरोगता ।
अजाड्यं वाक्पटुत्वं च हनुमत्स्मरणाद् भवेत् ॥

ॐ आञ्जनेयाय विद्महे वायुपुत्राय धीमहि तन्नो हनुमत् प्रचोदयात् ॥

ॐ फ्रौं ।
ॐ नमो हनुमते आवेषे आवेषे स्वाहा ।
ॐ हूं हनुमते रुद्रात्मकाये हूं फट् स्वाहा ।
ॐ ऐं भ्रीं हनुमते श्रीरामदूताय नमः ।

ॐ ह्रीं हरि मर्कट मर्कटाय स्वाहा ।

अथ स्तोत्रम् ।

प्रपन्नानुरागं प्रभाकाञ्चनाभं
जगद्बीतिशौर्यं तुषाराद्रिधैर्यम् ।
तृणीभूतहेतिं रणोद्यद्विभूतिं
भजे वायुपुत्रं पवित्राप्तमित्रम् ॥ १॥

भजे पावनं भावनानित्यवासं
भजे बालभानु प्रभाचारुभासम् ।
भजे चन्द्रिकाकुन्द मन्दारहासं
भजे सन्ततं रामभूपाल दासम् ॥ २॥

भजे लक्ष्मणप्राणरक्षातिदक्षं
भजे तोषितानेक गीर्वाणपक्षम् ।
भजे घोरसङ्ग्राम सीमाहताक्षं
भजे रामनामाति सम्प्राप्तरक्षम् ॥ ३॥

कृताभीलनादं क्षितिक्षिप्तपादं
घनक्रान्त भृङ्गं कटिस्थोरु जङ्घम् ।
वियद्व्याप्तकेशं भुजाश्लेषिताश्मं
जयश्री समेतं भजे रामदूतम् ॥ ४॥

चलद्वालघातं भ्रमच्चक्रवालं
कठोराट्टहासं प्रभिन्नाब्जजाण्डम् ।
महासिंहनादा द्विशीर्णत्रिलोकं
भजे चाञ्जनेयं प्रभुं वज्रकायम् ॥ ५॥

रणे भीषणे मेघनादे सनादे

सरोषे समारोपिते मित्रमुख्ये ।

खगानां घनानां सुराणां च मार्गे

नटन्तं वहन्तं हनूमन्त मीडे ॥ ६ ॥

कनद्रत्न जम्भारि दम्भोलिधारं

कनद्दन्त निर्धूतकालोग्र दन्तम् ।

पदाघातभीताब्धि भूतादिवासं

रणक्षोणिदक्षं भजे पिङ्गलाक्षम् ॥ ७ ॥

महागर्भपीडां महोत्पातपीडां

महारोगपीडां महातीव्रपीडाम् ।

हरत्याशु ते पादपद्मानुरक्तो

नमस्ते कपिश्रेष्ठ रामप्रियोयः ॥ ८ ॥

सुधासिन्धुमुल्लङ्घ्य नाथोग्र दीप्तः

सुधाचौषदीस्ताः प्रगुप्तप्रभावम् ।

क्षणद्रोणशैलस्य सारेण सेतुं

विना भूःस्वयं कस्समर्थः कपीन्द्रः ॥ ९ ॥

निरातङ्कमाविश्य लङ्कां विशङ्को

भवानेन सीतातिशोकापहारी ।

समुद्रान्तरङ्गादि रौद्रं विनिद्रं

विलङ्घ्योरु जङ्घस्तुताऽमर्त्यसङ्घः ॥ १० ॥

रमानाथ रामः क्षमानाथ रामः

अशोकेन शोकं विहाय प्रहर्षम् ।

वनान्तर्घनं जीवनं दानवानां

विपाट्य प्रहर्षात् हनूमत् त्वमेव ॥ ११॥

जराभारतो भूरिपीडां शरीरे
निराधारणारूढ गाढ प्रतापे ।
भवत्पादभक्तिं भवद्भक्तिरक्तिं
कुरु श्रीहनूमत्प्रभो मे दयालो ॥ १२॥

महायोगिनो ब्रह्मरुद्रादयो वा
न जानन्ति तत्त्वं निजं राघवस्य ।
कथं ज्ञायते मादृशे नित्यमेव
प्रसीद प्रभो वानरेन्द्रो नमस्ते ॥ १३॥

नमस्ते महासत्त्ववाहाय तुभ्यं
नमस्ते महावज्र देहाय तुभ्यम् ।
नमस्ते परीभूत सूर्याय तुभ्यं
नमस्ते कृतमर्त्य कार्याय तुभ्यम् ॥ १४॥

नमस्ते सदा ब्रह्मचर्याय तुभ्यं
नमस्ते सदा वायुपुत्राय तुभ्यम् ।
नमस्ते सदा पिङ्गलाक्षाय तुभ्यं
नमस्ते सदा रामभक्ताय तुभ्यम् ॥ १५॥

॥ फलश्रुतिः ॥

हनुमद्भुजङ्गप्रयातं प्रभाते
प्रदोषेऽपि वा चार्धरात्रेऽप्यमर्त्यः ।
पठन्नश्नतोऽपि प्रमुक्ताघजालं
सदा सर्वदा रामभक्तिं प्रियाति ॥ १६॥

इति श्रीमदाञ्जनेय भुजङ्गप्रयातस्तोत्रम् सम्पूर्णं

---

# श्रीमदाञ्जनेयभुजङ्गप्रयातस्तोत्रम्

ॐ

श्रीरामजयम् ।

ॐ आञ्जनेयाय विद्महे । रामदूताय धीमहि । तन्नो जयः प्रचोदयात् ॥

सदारामभक्तिप्रसारप्रडीनं सदातारकानन्दनामोपगङ्गम् ।
सदाध्यानलीनं सदानामगानं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ १॥

सदारामनामप्लवाह्लादरूपं सदारामनामाधरस्मेरवक्त्रम् ।
सदारामगानातिमाधुर्यकण्ठं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ २॥

सदानामयोगं सदारामरागं सदाचित्तसम्पूर्णनामप्रभावम् ।
सदाब्रह्मनिष्ठं वरज्ञानपूर्णं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ ३॥

सदारामदासं महावीरवर्यं सदानामपेयूषपानप्रमत्तम् ।
सुनामप्रहृष्टं सभक्ताग्रगण्यं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ ४॥

सुनामस्वरालापबाष्पाकुलाक्षं सुसङ्गीतनामप्रभावस्वभावम् ।
स्वरस्वादुनामोपभोग्यं सुभाग्यं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ ५॥

ससूर्यप्रकाशं ससत्त्वप्रवाचं असाध्यप्रभावं सुसाध्यप्रमाणम् ।
सदाध्यातरामस्वरूपप्रकाशं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ ६॥

ससत्त्वं फलाशं सुमेधाविलासं सुसीतामनश्शोकनाशं प्रशान्तम् ।
सुवेगं यजं तं भजे रामदूतं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ ७॥

महद्ब्रह्मचर्यं मनोवाक्स्थरामं मनस्कायसञ्जीवनौषध्यधेयम् ।
महीधारकन्धारधारप्रतापं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ ८॥

ससीतस्वरारामनामप्रगेयं ससङ्गीतसाहित्यविद्याप्रवीणम् ।
सुसप्तस्वरानन्दनृत्याभिलास्यं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ ९॥

हरिश्रेष्ठरत्नं हरिप्रेष्ठभक्तं हरिस्मेरहृत्पद्मवासानुरागम् ।
हरप्रीतनामप्रियं भक्तवर्यं हरांशं हनूमन्तशूरं नमामि ॥ १०॥

हिमागप्रशान्तिस्वमाधुर्यगायं हिमानन्दगङ्गाप्लवाह्लादगेयम् ।
हिमापूतरम्याष्ट्रध्यानस्थदेवं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ ११॥

मनोगालनागीतरामाभिरामं सुरागानुरागं सुनामाभिजप्यम् ।
मनोजस्वरागीतसीतावराप्तं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ १२॥

वरानन्दरामस्ववाचाभिनन्दं सरागप्रभाषं स्वरारामरामम् ।
कुरोगप्रणाशं वरारोग्यदायं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ १३॥

सुसत्कार्यसिद्धिं सुसद्भक्तिबुद्धिं विरागत्ववृद्धिं सुरागप्रवृद्धिम् ।
सुनादप्रवृत्तिं सुबोधं सुशक्तिं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ १४॥

सुसङ्गीतवाणिं सुसत्पुष्पपाणिं कविस्फूर्तिरक्तिं कपिं रागहृष्टिम् ।
सदासत्त्वदृष्टिं सदासक्तिपुष्टिं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ १५॥

गुरुत्यागराजेन्द्रसद्गानलोलं तदाह्लादसन्नामगानप्रसन्नम् ।
कृताञ्जल्यतिप्रेष्ठनामप्रलीनं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ १६॥

गुरुत्यागराजेन्द्रशिष्योपगीतं सुपुष्पोपहारं सुभक्तिप्रणीतम् ।
मनोजस्तुतिस्फूर्तिपुष्पार्चितं तं सदात्राणभक्तं नमाम्याञ्जनेयम् ॥ १७॥

भुजङ्गप्रयातस्फुरद्भक्तिगीतं भुजङ्गप्रयातप्रगीतिप्रमोदम् ।
भुजङ्गावतारानुजप्रेष्ठभक्तं भजे मारुतिं तं सभक्तं सुभद्रम् ॥ १८॥

सुभद्रं वरानन्दरामानुरागं सुभद्रं स्वरानन्दनामाभिगेयम् ।
सुभद्रं वरारामरामोपसेवं सुभद्रं हनूमन्तधीरं भजेहम् ॥ १९॥

श्रीसीतारामभक्ताय रामनामरताय च ।
नामगानाभिलोलाय आञ्जनेयाय मङ्गलम् ॥

इति सद्गुरुश्रीत्यागराजस्वामिनः शिष्यया भक्तया पुष्पया कृतं
आञ्जनेयभुजङ्गप्रयातस्तोत्रं गुरौ समर्पितम् ।
ॐ शुभमस्तु ।

---

## अथ मङ्गलश्लोकाः

वैशाखे मासि कृष्णाया दशम्यां मन्दवासरे ।
पूर्वाभाद्रप्रभूताय मङ्गलं श्रीहनूमते ॥
करुणारसपूर्णाय फलापूपप्रियाय च ।
नानामाणिक्यहाराय मङ्गलं श्रीहनूमते ॥
सुवर्चलाकलत्राय चतुर्भुजधराय च ।
उष्ट्रारूढाय वीराय मङ्गलं श्रीहनूमते ॥
दिव्यमङ्गलदेहाय पीताम्बरधराय च ।
तप्तकाञ्चनवर्णाय मङ्गलं श्रीहनूमते ॥
भक्तरक्षणशीलाय जानकीशोकहारिणे ।

ज्वलत्पावकनेत्राय मङ्गलं श्रीहनूमते ॥

पम्पातीरविहाराय सौमित्रिप्राणदायिने ।

सृष्टिकारणभूताय मङ्गलं श्रीहनूमते ॥

रम्भावनविहाराय गन्धमादनवासिने ।

सर्वलोकैकनाथाय मङ्गलं श्रीहनूमते ॥

पञ्चाननाय भीमाय कालनेमिहराय च ।

कौण्डिन्यगोत्रजाताय मङ्गलं श्रीहनूमते ॥

इति स्तुत्वा हनूमन्तं नीलमेघो गतव्यथः ।

प्रदक्षिणनमस्कारान् पञ्चवारं चकार सः ।।

इति मङ्गलश्लोकाः

---

# श्री आञ्जनेयस्तोत्रम्

रं रं रं रक्तवर्णं दिनकरवदनं तीक्ष्णदंष्ट्राकरालं

रं रं रं रम्यतेजं गिरिचलनकरं कीर्तिपञ्चादिवक्त्रम् ।

रं रं रं राजयोगं सकलशुभनिथिं सप्तभेतालभेद्यं

रं रं रं राक्षसान्तं सकलदिशयशं रामदूतं नमामि ॥ १॥

खं खं खं खड्गहस्तं विषज्वरहरणं वेदवेदाङ्गदीपं

खं खं खं खड्गरूपं त्रिभुवननिलयं देवतासुप्रकाश ।

खं खं खं कल्पवृक्षं मणिमयमकुटं मायमायास्वरूपं

खं खं खं कालचक्रं सकलदिशयशं रामदूतं नमामि ॥ २॥

इं इं इं इन्द्रवन्द्यं जलनिधिकलनं सौम्यसाम्राज्यलाभं

इं इं इं सिद्धियोगं नतजनसदयं आर्यपूजार्चिताङ्गम् ।

इं इं इं सिंहनादं अमृतकरतलं आदि अन्त्यप्रकाशं

इं इं इं चित्स्वरूपं सकलदिशयशं रामदूतं नमामि ॥ ३॥

सं सं सं साक्षिरूपं विकसितवदनं पिङ्गालाक्षं सुरक्षं
सं सं सं सत्यगीतं सकल मुनिस्तुतं शास्त्रसम्पत्करीयम् ।
सं सं सं सामवेदं निपुणसुललितं नित्यतत्त्वं स्वरूपं
सं सं सं सावधानं सकलदिशयशं रामदूतं नमामि ॥ ४॥

हं हं हं हंसरूपं स्फुटविकटमुखं सूक्ष्मसूक्ष्मावतारं
हं हं हं अन्तरात्मं रविशशिनयनं रम्यगम्भीरभीमम् ।
हं हं हं अट्टहासं सुरवरनिलयं ऊर्ध्वरोमं करालं
हं हं हं हंसहंसं सकलदिशयशं रामदूतं नमामि ॥ ५॥

इति आञ्जनेयस्तोत्रं समाप्तम्

---

# नीलकृत आञ्जनेयस्तोत्रम्

ॐ जय जय । श्रीआञ्जनेय । केसरीप्रियनन्दन । वायुकुमार ।
ईश्वरपुत्र । पार्वतीगर्भसम्भूत । वानरनायक ।
सकलवेदशास्त्रपारग । सञ्जीवनीपर्वतोत्पाटन ।
लक्ष्मणप्राणरक्षक । गुहप्राणदायक । सीतादुःखनिवारक ।
धान्यमाली शापविमोचन । दुर्दण्डीबन्धविमोचन ।
नीलमेघराज्यदायक । सुग्रीवराज्यदायक । भीमसेनाग्रज ।
धनञ्जयध्वजवाहन । कालनेमिसंहार । मैरावणमर्दन ।
वृत्रासुरभञ्जन । सप्तमन्त्रिसुतध्वंसन । इन्द्रजिद्वधकारण ।
अक्षकुमारसंहार । लङ्किणीभञ्जन । रावणमर्दन ।
कुम्भकर्णवधपरायण । जम्बुमालिनिषूदन । वालिनिबर्हण ।
राक्षसकुलदाहन । अशोकवनविदारण । लङ्कादाहक ।
शतमुखवधकारण । सप्तसागरवालसेतुबन्धन ।

निराकार-निर्गुण-सगुणस्वरूप । हेमवर्णपीताम्बरधर ।

सुवर्चलाप्राणनायक । त्रिंशत्कोट्यर्बुदरुद्रगणपोषक ।

भक्तपालनचतुर । कनककुण्डलाभरण ।

रत्नकिरीटहारनूपुरशोभित । रामभक्तितत्पर ।

हेमरम्भावनविहार वक्षताङ्कितमेघवाहक ।

नीलमेघश्याम । सूक्ष्मकाय । महाकाय । बालसूर्यग्रसन ।

ऋष्यमूकगिरिनिवासक । मेरुपीठकार्चन । द्वात्रिंशदायुधधर ।

चित्रवर्ण । विचित्रसृष्टिनिर्माणकर्त्रे । अनन्तनाम ।

दशावतार । अघटनघटनासमर्थ । अनन्तब्रह्मन् ।

नायक । दुर्जनसंहार । सुजनरक्षक । देवेन्द्रवन्दित ।

सकललोकाराध्य । सत्यसङ्कल्प । भक्तसङ्कल्पपूरक ।

अतिसुकुमारदेह । अकर्दमविनोदलेपन । कोटिमन्मथाकार ।

रणकेलिमर्दन । विजृम्भमाणसकललोककुक्षिम्भर ।

सप्तकोटिमहामन्त्रतन्त्रस्वरूप ।

भूतप्रेतपिशाचशाकिनीडाकिनीविध्वंसन ।

शिवलिङ्गप्रतिष्ठापनकारण । दुष्कर्मविमोचन ।

दौर्भाग्यनाशन । ज्वरादिसकलरोगहर । भुक्तिमुक्तिदायक ।

कपटनाटकसूत्रधारिन् । तलाविनोदाङ्कित । कल्याणपरिपूर्ण ।

मङ्गलप्रद । गानलोल । गानप्रिय । अष्टाङ्गयोगनिपुण ।

सकलविद्यापारीण । आदिमध्यान्तरहित । यज्ञकर्त्रे ।

यज्ञभोक्त्रे । षण्मतवैभवसानुभूतिचतुर । सकललोकातीत ।

विश्वम्भर । विश्वमूर्ते । विश्वाकार । दयास्वरूप ।

दासजनहृदयकमलविहार । मनोवेगगमन । भावज्ञनिपुण ।

ऋषिगणगेय । भक्तमनोरथदायक । भक्तवत्सल ।

दीनपोषक । दीनमन्दार । सर्वस्वतन्त्र । शरणागतरक्षक ।

आर्तत्राणपरायण । एक असहायवीर । हनुमन् विजयीभव ।

दिग्विजयीभव । दिग्विजयीभव ।

इति नीलकृतं श्रीआञ्जनेयस्तोत्रम् ।

---

# श्रीमदाञ्जनेयसुप्रभातम्

श्रीसीतारामाभ्यां नमः । श्रीमदाञ्जनेयाय नमः ।

अमलकनकवर्णं प्रज्वलत्पावकाक्षं सरसिजनिभवक्त्रं सर्वदा सुप्रसन्नम्

रणरचनसुगात्रं कुण्डलालङ्कृताङ्गं परजयकरवालं रामदूतं नमामि ॥

श्रीरामचन्द्रचरणाम्बुजमत्तभृङ्ग श्रीराममन्त्रजपशील भवाब्धिपोत

।

श्रीजानकीहृदयतापनिवारमूर्ते श्रीवीर धीर हनुमन् तव सुप्रभातम् ॥ १॥

श्रीरामदिव्यचरितामृतास्वादलोल श्रीरामकिङ्कर गुणाकर दीनबन्धो ।

श्रीरामभक्त जगदेकमहोग्रशौर्य श्रीवीर धीर हनुमन् तव सुप्रभातम् ॥ २॥

सुग्रीवमित्र कपिशेखर पुण्यमूर्ते सुग्रीवराघवसमागमदिव्यकीर्ते ।

सुग्रीवमन्त्रिवर शूरकुलाग्रगण्य श्रीवीर धीर हनुमन् तव सुप्रभातम् ॥ ३॥

भक्तार्तिभञ्जन दयाकर योगिवन्द्य श्रीकेसरीप्रियतनूज सुवर्णदेह ।

श्रीभास्करात्मजमनोऽम्बुजचञ्चरीक श्रीवीर धीर हनुमन् तव सुप्रभातम्॥ ४॥

श्रीमारुतप्रियतनूज महाबलाढ्य मैनाकवन्दितपदाम्बुज दण्डितारिन् ।

श्री उष्ट्रवाहन सुलक्षणलक्षिताङ्ग श्रीवीर धीर हनुमन् तव सुप्रभातम्॥ ५॥

पञ्चाननस्य भवभीतिहरस्य रामपादाब्जसेवनपरस्य परात्परस्य ।

श्री अञ्जनाप्रियसुतस्य सुविग्रहस्य श्रीवीर धीर हनुमन् तव सुप्रभातम्॥ ६॥

गन्धर्वयक्षभुजगाधिपकिन्नराश्च आदित्यविश्ववसुरुद्रसुरर्षिसङ्घाः ।
सङ्कीर्तयन्ति तव दिव्यसुनामपङ्क्तिं श्रीवीर धीर हनुमन् तव सुप्रभातम् ॥ ७॥

श्रीगौतमच्यवनतुम्बुरुनारदात्रिमैत्रेयव्यासजनकादिमहर्षिसङ्घाः ।
गायन्ति हर्षभरितास्तव दिव्यकीर्तिं श्रीवीर धीर हनुमन् तव सुप्रभातम् ॥ ८॥

भृङ्गावली च मकरन्दरसं पिबेद्यं कूजन्त्युदारमधुरं चरणायुधाश्च ।
देवालये घनगभीरसुशङ्खघोषः श्रीवीर धीर हनुमन् तव सुप्रभातम् ॥ ९॥

पम्पासरोवरसुपुण्यपवित्रतीर्थमादाय हेमकलशैश्च महर्षिसङ्घाः ।
तिष्ठन्ति त्वच्चरणपङ्कजसेवनार्थं श्रीवीर धीर हनुमन् तव सुप्रभातम् ॥ १०॥

श्रीसूर्यपुत्रप्रिय नाथ मनोज्ञमूर्ते वातात्मजात कपिवीर सुपिङ्गलाक्ष ।
सञ्जीवनाय रघुवीरसुभक्तवर्य श्रीवीर धीर हनुमन् तव सुप्रभातम् ॥ ११॥

||ओम||



 